ऐन्द्राग्नैकविधिर्मैवं वैषम्याच्चैव कारतः ॥ ३० ॥
कालो लाक्षणिकोऽप्यस्तु स्वार्थत्वायेति चेन्न तत् ।
स्तुत्या विध्येकवाक्यत्वात् स्वार्थत्वाच्चानुवादता ॥ ३१ ॥

दर्शपूर्णमासयोरिदमाम्नायते पुरोडाशाभ्यामेवा सोमयाजिनं याजयेत् यावेतावाग्नेयश्चैन्द्राग्नश्चेति। तत्र च षट् पक्षान् क्रमेणोपन्यासपूर्वकं निरस्य सप्तममवस्थापयति। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र योऽधिकारी श्रुतस्तस्यायं शेषः स्यात्। कुतः तच्छ्रुतेः पुरोडाशसाधनकस्य यागस्य यः कर्त्ताधिकारवाक्ये श्रूयते स एवात्र सोमयाजिशब्देन विशेषितः श्रूयत इत्याद्यः पक्षः। नैष युक्तः कात्स्न्र्यनित्यत्वयोर्बाधप्रसङ्गात्। तथा हि पुरोडाशाभ्यामेवेत्येवकारेण साङ्नाय्योपांशुयाजयोर्व्यवच्छेदः। तथा पुरोडाशद्वयस्याग्नेयश्चैन्द्राग्नश्चेति विशेषितत्वादग्नीषोमीयस्यापि व्यवच्छेदः ततः कात्स्न्र्यं बाध्येत। तथा सोमयाजिनमेवेत्यन्वयस्तदानीं सोमयागादूर्ध्वं दर्शपूर्णमासव्यवच्छेदात् यावज्जीववाक्यात् प्रापितनित्यत्वं बाध्येत तस्माद्दर्शपूर्णमासाभ्यामन्ये आग्नेयैन्द्राग्नकर्मणी विधीयेते इति द्वितीयः पक्षः। यावेताविति प्रसिद्धानुवादेन दर्शपूर्णमासावेव प्रत्यभिज्ञायेते पुरोडाशाभ्यामेवेत्येवकारश्च कर्मान्तरपक्षे व्यर्थः स्यात्। तस्मात् प्रसिद्धकर्मानुवादेन याजयेदिति णिजर्थ ऋत्विजं प्रति विधीयते। एवकारस्य प्रयोजनं साङ्नाय्यादिनिवृत्तिरिति तृतीयः पक्षः सोऽप्यनुपपन्नः ऋत्विग्गामी फलस्य कस्यचिदश्रवणात्। न च विश्वजिन्न्यायेन कल्पयितुं शक्यं परार्थकर्मणि प्रवृत्तस्यार्थप्राप्तत्वेनासम्भ-

यात। तस्मात् कालविधिरस्तु सोमयागात् प्राचीने काले पुरोडाशाभ्यामेव यजयेन्न तु सांनाय्येन सोऽयं चतुर्थः पक्षः। एषोऽप्ययुक्तः असोमयाजिशब्दस्य काले लक्षणावृत्तिप्रसङ्गात् तस्मादैन्द्राग्नस्यैकस्य पौर्णमास्यामप्राप्तत्वेन विधिरस्तु आग्नेयस्तु पौर्णमास्याममावास्यायाञ्च नित्यप्राप्तत्वादनूद्यत इति पञ्चमः पक्षः। सोऽप्ययुक्तः सकृत् प्रयुक्तस्यैकस्य लिङ्प्रत्ययस्य विधित्वमनुवादत्वञ्चेति वैषम्यप्रसङ्गात् एव कारस्यात्र व्यर्थः। तस्मादगत्या तत्र लाक्षणिकत्वमभ्युपेत्यापि कालस्य विधिरस्तु। तथाहि असोमयाजिनः सांनाय्ये तावत् प्रतिप्रसवः श्रूयते। तदिदं सन्नयेदिति यदा सोमयागो नास्ति तदापि सन्नयेदेवेत्यर्थः। तथा सति सोमयाज्य सोमयाजिनोरुभयोरप्यमावास्यायां सांनाय्यमैन्द्राग्नपुरोडाशेन सह भिन्नविषयत्वाभावाद् विकल्पितः पुरोडाशः सोमयागात् प्रागेव पश्चात्तु सांनाय्यमेवेत्यभिप्रेत्य कालो विधीयते। तथा सत्येतच्छास्त्रं सार्थकं नान्यथेति षष्ठः पक्षः। सोऽप्ययुक्तः सांनाय्येन तु सोमयाजिनमित्यस्य विधेस्तावत्काले सत्येकवाक्यत्वलाभात् सार्थकत्वञ्चैवं सति भविष्यति तस्मादनुवादोऽयमिति सप्तमः पक्षो राद्धान्तः।

पञ्चदशाधिकरणमारचयति।

उपांशुयाजे यत् किञ्चिद् द्रव्यमाज्यमुतादिमः।
विशेषानुक्तितो मैवं ध्रौवाज्यस्य विधानतः॥ ६२।

उपांशुयाजमन्तरा यजतीत्यत्र द्रव्यविशेषस्यानुक्तत्वादैच्छिकं द्रव्यमिति चेत् मैवम्। आज्यस्य श्रुतत्वात् ताव:

श्रुतावग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति
हि श्रुतं न चैवमप्यनियतं किञ्चिदाज्यमिति ग्राह्यम्।
ध्रौवस्य विहितत्वात् सर्वस्मै वा एतद्यज्ञाय गृह्यते यत्
ध्रुवायामाज्यमिति विहितं विध्यश्रवणेऽपि ध्रौवाज्यस्य
सप्रयोजनत्वाय विपरिणामः कर्त्तव्यः।

षोडशाधिकरणमारचयति।

तत्र यः कोऽपि देवः स्यात्तान्त्रिको वाग्रिमो भवेत्।
अविशेषात् प्रकरणात्तान्त्रिकोऽत्र नियम्यते॥ ३३॥

तत्रोपांशुयाजेया काचिद्देवता स्यात् विष्णुरुपांशु-
यष्टव्य इत्यादेरर्थवादत्वेनाविधायकत्वात् अन्यस्य च देव-
ताविधेरदर्शनात् यागेन देवतामात्रस्यैव कल्पनाच्च मैवम्
उपांशुयाजस्य दर्शपूर्णमासप्रकरणपठितत्वाद्दर्शपूर्णमासतन्त्र-
मध्यपठित एव कश्चिद्देवः प्रत्याम्नात्योपांशुयाजे नियम्यते।

सप्तदशाधिकरणमारचयति।

कोऽपि देवस्तान्त्रिकषु नियतो वा तदापि किम्।
प्रजापतिरुताग्निः स्यादग्नीषोमावुताथवा॥ ३४॥
विष्णवेद्राग्निमुत्सृज्य विकल्प्यं देवतात्रयम्।
कोऽप्यत्रानियमादेवमुपांशुत्वादिलक्षणात्॥ ३५॥
प्राजापतिरुपांशुत्वान्न तूष्णीम्भावयोगतः।
अग्निर्मुख्यत्वतो मैवं तद्याज्यादेरपाठतः॥ ३६॥
अग्नीषोमौ तदुक्तौ नो तत्र कालविधानतः।
विष्णुर्याज्यादितस्त्वत्र प्राजापत्योक्तिबाधनात्॥ ३७॥
याज्यादेर्विष्णुतः प्राप्ता विकल्प्यन्तेऽत्र देवताः।
विधिशेषार्थवादेऽपि तत्र प्राप्तमनूद्यते॥ ३८॥

स यागो विहितः । पुरोडाशौ च पौर्णमास्यामाग्नेयाग्नीषोमीयौ अमावास्यायामाग्नेयैन्द्राग्नौ ततो हिः पुरोडाशसन्निधेः समानत्वाद्दर्शपूर्णिमायेत्युभयमुपांशु याजस्य काल इत्याद्यः पक्षः । दर्शं प्रकृत्य याज्याकाण्डे आग्नेययाज्याया अधस्तात् वैष्णवयाज्यायाः पाठात् प्रकरणस्य सन्निधितः प्रबलत्वाद्दर्श एव काल इति मध्यमः पक्षः । तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति पौर्णमास्यास्तत् कालत्वेन विधानाद्वाचनिकस्य विधेः प्रबलत्वात् पौर्णमास्येव कालस्तथा च वैष्णवयाज्या प्रकरणादुत्कृष्यताम् ।

एकोनविंशाधिकरणमारचयति ।

पुरोडाशैकयुक्तायां पौर्णमास्यामयं न हि ।
स्याद्दानास्त्यन्तरत्वस्य लब्धे कालेऽस्ति सत्रवत् ॥ ४१ ॥

सोमात् प्रागग्नीषोमीयपुरोडाशरहिता केवलाग्नेयपुरोडाशयुक्ता पौर्णमासी भवति स सोमेनेष्ट्वाग्नीषोमीयो भवतीति वाक्येनाग्नीषोमीययोः सोमयागोत्तरकालत्वावगमात् । तस्मादुपांशुयाजो नास्ति । कुतः उपांशुयाजमन्तरा यजतीति पुरोडाशयोरन्तरालवर्तित्वस्य गुणत्वेन विधानादिति प्राप्ते ब्रूमः । किं पुरोडाशयोरन्तरालकालस्य विशेषणभूतौ उतोपलक्षणभूतौ नाद्यः । अन्तरालकालवत्तु र्विशेषणयोः पुरोडाशयोरुपांशुयाजगुणत्वप्रसङ्गात् । न चैतद्युक्तम् । उपांशुयाजवत्तयोरपि स्वातन्त्र्येणैव तत्तत्फलान्वयात् द्वितीये तु मञ्चन्यायेनोपलक्षकस्याग्नीषोमीयपुरोडाशस्याभावेऽप्युपलक्ष्ये काले यागोऽस्ति यथा मञ्च-